# श्रीहनुमदष्टोत्तरशतनाम स्तोत्रम्

श्रीपराशर उवाच ।

अन्यस्तोत्रं प्रवक्ष्यामि रामप्रोक्तं महामुने ।

अष्टोत्तरशतं नाम्नां हनुमत्प्रतिपादकम् ॥

ॐ अस्य श्रीहनुमदष्टोत्तरशतदिव्यनामस्तोत्रमन्त्रस्य

श्रीरामचन्द्र ऋषिः ।

अनुष्टुप्छन्दः । श्रीहनुमान् देवता । मारुतात्मज इति बीजम् ।

अञ्जनासूनुरिति शक्तिः । वायुपुत्रेति कीलकम् ।

मम श्रीहनुमत्प्रसादसिद्ध्यर्थे जपे विनियोगः ॥

नमस्तस्मै हनुमते येन तीर्णो महार्णवः ।

रामलक्ष्मणसीताप्युत्तीर्णशोकमहार्णवः ॥

सप्तषष्टिर्हितां कोटि वानराणां तरस्विनाम् ।

यस्समुज्जीवयामास तं वन्दे मारुतात्मजम् ॥

यो दक्षिणां दिशं गत्वा वैदेहीं राममुद्रया ।

अजीवयत्तममृतं प्रपद्ये पवनात्मजम् ॥

इतिहासपुराणेषु प्रकीर्णानामितस्ततः ।

शतमष्टोत्तरं नाम्नां सङ्ग्रहिष्ये हनूमतः ॥

श्रीरामचन्द्र उवाच ।

ॐ आयुष्मते । अप्रमेयात्मने । हनुमते नमः ।

मारुतात्मजाय ऽञ्जनातनयाय श्रीमते ।

बालार्कफलभुक्धिये । सूर्यपृष्ठगमनाय पुण्याय ।

सर्वशास्त्रार्थतत्त्वविदे । बहुश्रुतव्याकरणाय ।

रामसुग्रीवसख्यकृते । रामदासाय । रामदूताय ।

रामात्मने । रामदैवताय । रामभक्ताय ।

रामसखाय । रामनिधये । रामहर्षणाय ।

महानुभावाय । मेधाविने ।

महेन्द्रगिरिमर्दनाय । मैनाकमानिताय ।

मान्याय । महोत्साहाय । महाबलाय ।

देवमाताहृन्निवहाय । गोष्पदीकृतवारिधये ।

लङ्काद्वीपविचित्राङ्गाय । सीतान्वेषणकोविदाय ।

सीतादर्शनसन्तुष्टाय । रामपत्नीप्रियंवदाय ।

दशकण्ठशिरच्छेत्रे । स्तुतताक्ष्याय ।

अभिदर्शनाय । धीराय । काञ्चनवर्णाङ्गाय ।

तरुणार्कनिभाय । दीप्तानलार्चिषे । द्युतिमते ।

वज्रदंष्ट्राय । नखायुधाय । मेरुमन्दरसङ्काशाय ।

विद्रुमप्रतिमाननाय । समर्थाय । विश्रान्ताय ।

दुर्धर्षाय । शत्रुकम्पनाय । अशोकवनिकाच्छेत्रे !

वीरकिङ्करसूदनाय । चैत्यप्रासादविध्वंसिने ।

जम्बुमालीनिषूदनाय । सीताप्रसादकाय ।

शौरये वस्त्रलाङ्गूलपावकाय । दग्धलङ्काय ।

अप्रमेयात्मने repeated 2 । महाजीमूतनिस्वनाय ।

संस्कारसम्पन्नवचसे । विभीषणविशोककृते ।

मुष्टिपिष्टदशास्याङ्गाय । लक्ष्मणोद्वाहनप्रियाय ।

धूम्राक्षघ्ने । अकम्पनघ्ने । त्रिशिरघ्ने । निकुम्भघ्ने ।

पापराक्षससङ्घघ्नाय । पापनाशनकीर्तनाय ।

मृतसञ्जीवनाय । योगिने । विष्णुचक्रपराक्रमाय ।

हस्तन्यस्तौषधिगिरये । चतुर्वर्गफलप्रदाय ।

लक्ष्मणोज्जीवनाय । श्लाध्याय । लक्ष्मणार्थहृतौषधये ।

दशग्रीववधोद्योगिने । सीतानुग्रहभाजनाय ।

रामं प्रत्यागताय । दिव्याय । वैदेहीदत्तभूषणाय ।

रामाद्भुतयशस्तम्भाय । यावद्रामकथास्थिताय ।

निष्कल्मषाय । ब्रह्मचारिणे । विद्युत्सङ्घातपिङ्गलाय ।

कदलीवनमध्यस्थाय । महालक्ष्मीसमाश्रयाय ।

भीमनिष्कम्पनाय । भीमाय । अव्यग्राय ।

भीमसेनाग्रजाय । युगाय । धनञ्जयरथारूढाय ।

शिवभक्ताय । शिवप्रियाय । चूर्णीकृताक्षदेहाय ।

ज्वलिताग्निनिभाननाय । पिङ्गाक्षाय ।

विभवे आक्लान्ताय । लङ्किणीप्राणघातकाय ।

पुच्छाग्निदग्धलङ्काय । माल्यवत्प्राणहारिणे ।

श्रीप्रदाय । अनिलसूनवे । वाग्मिने वानरनायकाय नमः ॥

इत्येवं कीर्तनं यस्य नाम्नामष्टोत्तरं शतम् ।

पुण्यं पवनपुत्रस्य पावनं परिकीर्तनम् ॥

कीर्तयन् श्रावयन् शृण्वन् आयुष्मत्तामरोगताम् ।

विष्णुभक्तिं श्रियं दीप्तिं प्राप्नोत्येव परायणः ॥

महाभयेषु युद्धेषु चोरव्यालमृगेषु च ।

जपतां कुरुते नित्यं भगवान् पवनात्मजः ॥

॥ इति श्रीरामप्रोक्तं श्रीहनुमदष्टोत्तरशतनामस्तोत्रम् सम्पूर्णम् ॥